# RĀMA VIJAYAM

by

*Prof. S. B. Raghunathacharya*
Vice-Chancellor
Rashtriya Sanskrit Vidyapeetha

PADMASRI PUBLICATIONS
TIRUPATI

# RĀMA VIJAYAM



**Prof. S. B. Raghunathacharya**
Vice-Chancellor
**Rashtriya Sanskrit Vidyapeetha**
Deemed University

**PADMASRI PUBLICATIONS**
**1996**

**RĀMA VIJAYAM**

Original Poem

By
Professor S.B. Raghunathacharya

First edition 1976
Second edition 1996

Copies can be had off

**Smt. S.B. Vijayalakshmi**
**Padmasri Publications**
6-6, Sri Satyasai Nagar
Tiruchanoor Road
TIRUPATI - 517 503.

Price Rs. 20/-

Printed at VEVIN GRAPHICS, RTC 'X' Roads, Hyd. Ph. 7602265

# आमुखम्

श्रीमद्भिः न्यायविद्याप्रवीणैः सरसकविवरैः श्रीरघुनाथाचार्यैः विरचितं रामविजयनामकं पञ्चसर्गात्मकं लघुकाव्यमादितः आन्तमपश्यम्। काव्यमिदं श्री रामचन्द्रकर्तृकं परशुरामस्य विजयं वर्णयत् उपमार्थान्तरन्यासाद्यलङ्कारैः शब्दमाधुर्यार्थगाम्भीर्यादिगुणैश्च सहृदयहृदयावर्जकं विराजते।

एतादृशानि लघुकाव्यानि माध्यमिककलाशालासु पाठ्यग्रन्थतया यदि निक्षिप्येरन् तदा तत्र संस्कृताध्येतारो माणवकाः महान्तमुपकारं लभेरन्। एतद्ग्रन्थकारैरन्यान्यपि लघुकाव्यानि निर्मितानि प्रकाशितानि च। प्रायः शास्त्रपाण्डित्यं सरसकवित्वं चेत्युभयमेकत्र द्रष्टुमशक्यम्। इमे श्रीरघुनाथाचार्याः शास्त्रे विद्वांसः सरसकवयश्च भवन्तीति प्रमोदस्य स्थानमेतत्।

भगवान् शेषाचलनायकः श्रीनिवासः एतेषामुत्साहं प्रवृत्तिं च सफलयतु इति प्रार्थये।

'शास्त्ररत्नाकर' 'तर्कवाचस्पति'

डा० एन्. एस् रामानुजताताचार्यः

न्याय-व्याकरण-वेदान्त-मीमांसाशिरोमणिः

रीडर्, के.सं. विद्यापीठम्

तिरुपति

३-१-७५

# FOREWORD

Sri S.B. Raghunathacharya, a gifted Sanskritist, has now come forward to present the lovers of Sanskrit Muse with a minor poem, the Ramavijaya, composed in five cantoes. The theme of the poem is the euloguim of the victory of Sri Ramachandra over Parasurama, when the former broke the bow of Lord Siva. Although the plot is drawn from the Ramayana, the author has introduced here and there some innovations which lend charm to the theme chosen by him.

As a critic, the author has depicted 'heroism' as the predominant sentiment which is embelished by the subordinate rasas of 'wonder' and 'Love'. He has made a successful attempt to present his theme in a lucid and attractive style. His love of variety is seen in the use of such rare meters as Tamarasa, Kalahamsa, Matta and Prabodhita. Further more the characterisation of Sri Rama and Parasurama in the poem reminds the critic of the Ramayana and the Raghuvamsa.

Sri Raghunathacharya finds his own place among the modern Sanskrit writers. While congratulating the author for his fine composition, I sincerely wish that this poem may win the approbation of both the connoisseur and the general student of Sanskrit Literature.

Tirupati
24-01-1976

**Dr. M.D. Balasubramanyam**
Principal, K.S. Vidyapeetham

# PREFACE

I have derived great pleasure in going through the Sanskrit poem Ramavijaya written by Sri S.B. Raghunathacharya Nyayavidyapraveena & M.A., Lecturer of the S.V. Oriental College, Tirupati. Formerly I knew the author as an eloquent speaker in Sanskrit, who had won even a medal for Sanskrit eloquence, given by the Ministry of Education, Government of India. Now this Sanskrit Kavya disclosed the fact that Sri Raghunathacharya wields a facile pen in Sanskrit poesy as well. This Kavya summarises the story of Rama from the time of his marriage up to the point of his conquering and subduing Parasurama on the way home. The style is lucid and mellifluous abounding in Alamkaras. The author promises to be reckoned as a good Sanskrit poet in his future career. Even so many poets there are who have been writing Telugu poems but rarely do we come across Sanskrit poets.

May Lord Venkateswara bless this young scholar with a brilliant career in the field of Sanskrit poetry.

**Dr. D. Arka Somayaji,**
Recepient of President's Award
for Sanskrit Studies,
Some time Principal, D.N.R. College,
Bhimavaram.

Tirupati,
5-2-76

# निवेदनम्

रामविजयाख्येयं कृतिः दशवर्षेभ्यः प्राक् यदा चिट्टिगूडूरस्थश्रीनारसिंहसंस्कृतकलाशालायां न्यायशास्त्रमधीयान आसं तदा प्रणीता मया। ततः परमियं अद्वितीयदिनपत्रिकायां संवर्धितधर्मायां सुधर्मायां प्रकटीकृता। अल्पीयसि समये विद्यार्थिना मया सन्दृब्धामिमां श्रावं श्रावं आचार्याः प्रकाशनाय प्रोत्साहयामासुः। अन्यव्यापारव्यापृतेन मया समयदौर्लभ्यात् नालम्भि कृतार्थता समीहायां तस्याम्। फलेग्रहिरद्य मनोरथ इति मोदः प्रमोद आनन्दः। खण्डकाव्यमिदं पञ्चसर्गात्मकम्। सर्गशीर्षकाद्याक्षरसंयोजनेन 'रामविजय' मितिं नामलाभः सम्पद्यते। बाल्यभाषितमिदम्। विपरिणतिमन्तरा तत्तथैव प्रकाशनीयमिति ममाभिनिवेशः। गुणलेशपरिग्रहणपारीणाः प्रेक्षावन्तः प्रमाणम्।

मदभ्यर्थनामूरीकृत्य आमुखमनुगृहीतवद्भ्यः सहृदयशिरोमणिभ्यः डा० मल्लादि बालसुब्रह्मण्यमहोदयेभ्यः, आचार्यवर्येभ्यः चतुस्तन्त्रिभ्यः डा० एन्. एस्. रामानुजताताचार्यमहाभागेभ्यः, भारतराष्ट्रपतिसम्मानितेभ्यः डा० डि. अर्कसोमयाजिमहाशयेभ्यश्च सकार्तज्ञ्यं हार्दिकान् प्रणामान् समर्पयामि। इत्थं रमणीयतया मुद्रितवद्भ्यः प्रियसुहृन्मणिभ्यः श्रीमद्भ्यः के. एन्. वरदराजय्यङ्गार् महोदयेभ्यः नतिततीर्नि वेदयामि।

तिरुपति
१-१-७६

एवं विधेयः विदुषाम्,
एस्. बि. रघुनाथाचार्यः

# विज्ञापनम्

इदं हि नामापरोक्षं प्रेक्षावतां यत् बहोः कालात् प्राक् सम्पन्नस्य प्रियतमस्य व्यतिकरस्य स्मरणापेक्षया नान्यदभिमततरमस्ति वस्तु स्पृहणीयमिति । सर्वदा नूतनांशसम्भावनाभावितान्तःकरणोऽपि मानवः न विस्मर्तुमिच्छति मधुरमधुरान् पूर्वानुभूतान् विशेषान् । तत्स्मरणमुखेन असकृदात्मानमानन्दयितुं प्रयतत एवैषः ।

त्रिंशद्वर्षेभ्यः प्राक् काव्यं किञ्चित् प्रणेयमिति बद्धाभिनिवेशेन मया पञ्चषदिवसेष्वेव प्राणायि खण्डकाव्यमिदं रामविजयाख्यम् । आचार्याणां प्रियसुहृदां च प्रोत्साहेन १९७६ तमे क्रीस्त्वब्दे प्रथमं मुद्रणमस्य संवृत्तम् । बहूनां मित्रमणीनां अभिलाषस्य पूरणार्थं पुनस्तदेव काव्यमधुना प्रकटीक्रियते ।

खण्डकाव्येऽस्मिन् रामायणप्रसिद्धमितिवृत्तं श्रीरामपरशुरामयोः समागमरूपं स्वीकृतम् । तदेव सचमत्कारं पञ्चसु सर्गेषु समभिवर्णितम् । यदीदं सहृदयान् साहितीरसिकान् प्रीणयितुमीष्टे तर्हि मामकीनं प्रयत्नमिमं फलेग्रहिमाकलय इति विज्ञापयामि ।

सत्यम् ।

27-7-1996. —रघुनाथाचार्यः

# विषयसूचिका



---

# रामविजयम्

## रामसमागमः

'श्रीरामचन्द्रस्सह सीतयाऽसौ
समादृतोद्वाहविधिः प्रतस्थे ।
इति स्ववंश्योन्नतिदर्शनार्थी
निरीक्षते सम्प्रति तिग्मरश्मिः ।।

न केवलं सोऽपि तु सर्व एव
लोको दिदृक्षुर्हि महानुभावम् ।
सीताहृदम्भोजचरद्विरेफं
समात्तभद्रं किल रामभद्रम् ।।

भ्रान्तो यथा स्यादिह पौरवर्गः
'स्वर्गस्समुत्सर्पति मर्त्यलोकम्'
इतीव देवा विचरन्ति मध्ये-
दिवं विमानेषु सहाङ्गनाभिः ॥

प्रजास्समस्ताः शुभवस्तुहस्ताः
पश्यन्ति सोत्कण्ठमितस्ततश्च ।
किमप्यदृष्टं च गवेषयन्तो
मार्गेषु पद्मादिभिरञ्चितेषु ॥

अत्रान्तरे 'भीकरकालमेघैः
आविष्टमाकाशमहो ! तमश्च ।
व्याप्नोति सर्वत्र रवः किमेतत् ?'
इत्याकुलः पौरजनो बभूव ॥

केचित् 'किमेतद्रमणीयरूपे
रामे समागच्छति सार्वभौमे ।
उपप्लवः कोप्युपजात एवं
जयी स भूयादिति मन्त्रयन्ते ॥

परे परात्मैकविदः पुमांसः
'परा विभूतिर्हि परात्परस्य ।
रामस्ततस्तस्य विनोद एषः
तथापि तस्मै शिवमित्यवोचन् ॥

एवं स्थिते साम्प्रतिकेऽत्र वृत्ते
समापतन् पङ्क्तिरथो वसिष्ठम् ।
उदीरयामास महानुभावं
भीतः प्रभुर्गद्गदया हि वाचा ॥

'अहो! महाभाग ! किमेवमत्र
शकुन्तरावो भयदः प्रकामम् ।
मृगाश्च बिभ्यत्यभियान्ति सद्यः
सीदन्ति चाङ्गानि ममाऽपि भूयः' ॥

निशम्य राजन्यवचो वसिष्ठो
निध्याय तत्सर्वमवोचदेवम् ।
'राजन् ! न चान्यत्स हि जामदग्न्यः
समापतत्यस्य विलास एषः' ॥

वसिष्ठवाचं परिशृण्वतोऽस्य
मूर्छा हि चैतन्यमहो ! जहार ।
सद्यो महाज्योतिरिवाविरासीत्
क्रुद्धः परं भार्गवराममूर्तिः ॥

तं भार्गवं चापधरं कुठार-
धारासमुत्सादितराजचक्रम् ।
अतर्कितोपागतमर्घ्यपाद्यैः
समर्चितुं राम इयेष नम्रः ॥

दृशा प्रसादामलया हि पश्यन्
समीपमागत्य विनीतवेषः ।
विकीर्य तत्पादयुगे सुमानि
कल्याणरामः प्रणनाम रामम् ॥

चकासतं नीलपयोदधाम्ना
शरन्नवाम्भोजदलायताक्षम् ।
आजानुबाहुं रमणीयमूर्तिं
आसेदिवान् दाशरथिं कुठारी ॥

अतन्द्रितो वीक्ष्य मुहूर्तमात्रं
स चित्रविन्यस्त इव स्थितोऽभूत्।
तदन्वकार्षीन्मनसि प्रबुद्ध
एवं महात्मा जमदग्निसूनुः॥

"किमेवमस्म्यप्रभुरात्मनश्च
किमक्षसंघोपि न मे स्वतन्त्रः।
कृतेऽपि यत्ने न च वागुदेति
रामस्य संदर्शनतोऽद्य यावत्॥

पश्यामि रामे प्रतिरूपमेव
मदीयमद्धा महिमानमीक्षे।"
इतीहमानस्तमुवाच धीरः
प्रवृद्धहर्यक्ष इवातिरुष्टः॥

'अये! भवानेव हि रामभद्रो
महेशचापप्रविभञ्जको यः।
भवत्प्रतिष्ठां च महेन्द्रशैले
निशम्य संद्रष्टुमिहागतोऽस्मि॥

मां विद्धि! रामं जनकेऽपराद्धुः
एकस्य भूपापसदस्य हेतोः।
त्रिस्सप्तकृत्वो जगतीभृतां यः
शीर्षैः कुठाराय बलिं चकार ॥

मयि स्थिते संप्रति रामनाम्नि
कुतस्तवापि व्यपदेश एषः।
विश्रान्तिरेकत्र विशेषशोभां
पुष्णाति शक्त्योरुभयोर्हि तस्मात् ॥

अन्यं विजित्यात्मयशोऽभिरामो
वहत्वभिख्यां भुवि रामनाम्ना।
अन्यो निरूप्यात्मबलं हि संख्ये
सूनुर्भृगूणां अथवा रघूणाम् ॥

न मे मनस्त्वां सुमनिर्विशेषं
युयुत्सते बालमभीह चापम्। ?
आदाय चेमं परिपूर्य मौर्व्या
शरं किलास्मिन्ननुसन्ददीथाः ॥

तथा यदि स्यात्कृतमङ्ग! नूनं
पश्यानि शक्तिं भवतो नियुद्धे।
द्रक्ष्यस्यहो ! भार्गवरामशक्तिं
अव्याहतां विस्मृतबाह्यवृत्तिः ॥

इत्युक्तवत्युद्धतवाचि तस्मिन्
शुचिस्मिताविष्कृतदन्तकान्तिः।
स रामचन्द्रः स्पृहणीयरूपः
तस्थौ विवक्षुः किमपि प्रसन्नः ॥

अत्रान्तरे भीकरमेघशब्दं
विडम्बयन् कोऽप्युदपादि शब्दः।
'न ब्राह्मणस्याप्यनुरूपमेतत्
उद्वृत्तवृत्तिः न हि मर्षणीयः' ॥

**वसन्ततिलकावृत्तम्-**

इत्याप्तगर्हणसमुत्पतदात्मवेगं वाक्यं
निशम्य सुचिरं परिचिन्त्य वृद्धाः।
सौमित्रिसम्भवतया विदुरेतदद्धा
रोषाभितप्तहृदये क्व नु शान्तिवार्ता ॥

*इति श्रीरघुनाथाचार्यकृतौ रामविजये*
*रामसमागमाख्यः प्रथमः सर्गः।*



# रामविजयम्

## महीपविलापः

महीपतिस्सुस्थमनाः कथञ्चित्
शैत्योपचारैः अवदद्वसिष्ठम् ।
'किं रामभद्रः कुशली महर्षे!
क्व जामदग्न्यः ? स हि किं प्रसन्नः'? ॥

इत्यूचुषि स्वामिनि भीतचित्ते
वसिष्ठ एवं निजगाद धीरः ।
'अकुण्ठितां राघवशक्तिमेव
विशङ्कसे पुत्र इति प्रभो! त्वम् ॥

अयं महात्मा जमदग्निसूनुः
इहाविरासीत् रमणीयमूर्तिः ।
आगच्छ! तस्मै वितरार्घ्यपाद्य-
स्रक्चन्दनादीनि सभक्ति सद्यः ॥

तपः पुनः क्रोध इति द्वयं हि
न चैकमेको भजते कदापि ।
भजत्तथा स्थास्यति नातिकालं
औपाधिकं क्रोधमवेहि तस्मिन्' ॥

इमां महर्षेर्वरुणात्मजस्य
वाचं निशम्यायतगात्र एव ।
रथादवातीर्य विनम्रशीर्षः
स जामदग्न्यं समुपाससाद ॥

उपेत्य तत्पादयुगं प्रणम्य
विषण्णचेता भयविह्वलश्च ।
'महातपस्विन्! करुणानिधे! त्वं
गृहाण! पाद्यादिसमर्प्यमाणम्' ॥

इत्यब्रवीदाशु स भार्गवश्च
दृशं समाकृष्य सरोषमस्मात् ।
किञ्चित्समावर्तितमूर्तिरस्य
नाजीगणद्वाचमजात्मजस्य ॥

यज्ञेऽददाः पूर्वमिमां भुवं च
त्वं कश्यपादिभ्य इति प्रसिद्धिः ।
तपस्विनस्ते निजितेन्द्रियस्य
स्पृहा हि जागर्ति भुवे पुनः किम् ?

तथा हि चेत्सत्यमिहैव वच्मि
समुद्रवेलावलयां धरित्रीम् ।
ददामि ते पुत्रमवाऽस्मदीयं
कल्याणरामं सुकुमारमूर्तिम् ॥

आगस्तवार्थे यदि कल्पितं स्यात्
मह्यं तदीयां हि विधेहि! शिक्षाम् ।
सज्जोऽहमस्मीह न काऽपि बाधा
पुत्रं मदीयं त्यज! दीनबन्धो! ॥

इत्यात्मजप्रेमभरेण भूयः
तथा गिरन्तं नृपसार्वभौमम् ।।
उवाच वाचं कुशिकात्मजन्मा
'न भीर्महाराज! तवे' ति सद्यः ।।

ततः पुनर्भार्गवराममूर्तिः
नाम्नोऽस्मदीयस्य धृतिर्गुरोर्मे ।
हरस्य चापप्रविभञ्जनं च
गुणः किमद्धा न हि मर्षणीयः ।।

भो! राम! राजन्यललाम! मुग्ध!
आहो! किमेतादृश एव लोकैः ।
कथं तथा स्तुत्यपदं गतोऽसि
निर्लज्ज! पित्र्यं किमिदं महत्वम् ।।

मृषोद्यमेतद्वच आविरासीत्
'शूरः परं दाशरथिः किलेति ।
लीनस्य शुद्धान्तजने तदाऽस्य
राज्ञो नु शूरस्सुत उद्भवेत्किम्? ।।

छिन्नं-न किञ्चिन्मम चान्यथापि
त्वं वैष्णवं भार्गवराममूलम्।
धनुर्गृहीत्वा मम सन्निधाने
शरेण संयोजय! तावदद्य ॥

स्याच्चेत्तथा द्रक्ष्यसि मत्प्रतापं
रणे ततश्चेति जगाद वाग्मी।
श्रुत्वा तदीयं वचसां कदम्बं -
भीतास्समे 'किन्नु भविष्यतीति?

**तामरसवृत्तम्-**

दशरथ एष सुतार्पितबुद्धिः
परशुधराग्रहभीतमनस्कः।
किमपि विधातुमनीशमिव स्वं
मनसि निधाय परं विललाप॥

*इति श्री रघुनाथाचार्यकृतौ रामविजये*
*महीपविलापाख्यः द्वितीय सर्गः।*



# रामविजयम्

## विनिग्रहः

महर्षिमूर्धन्यतनूभवश्च
महीसुराग्रेसर एष विद्वान् ।
महातपस्वी परमाप्तवृद्ध
इत्यार्य! वन्दे विनयावनम्रः ।

भवांस्तु मां सङ्गरभीरुमेव
मत्वा बहुप्रज्ञ इहाबभाषे ।
न पूज्यदीनानपराधिदण्डे
सरेद्रघूणामनघा हि शक्तिः ॥

तथापि सद्ब्राह्मणशासनं तत्
अवश्यमूरीक्रियते विधातुम् ।
उद्वाहदीक्षागत एष रामः
ततो हि सन्देग्धि महोदयाऽद्य ॥

अयं शतानन्दकृतो हि रक्षा-
बन्धो हरिद्रार्द्र इहार्य! भाति ।
वैवाहिकः सम्प्रति शोभतेऽसौ
ब्राह्मो ननु ग्रन्थिरविप्रतर्क्यः ॥

अतो यथा रोचत इत्थमत्र
स्थिते च तुभ्यं तदिहास्तु धर्म्यम् ।
इत्यादराद्दाशरथिः कुमार
उदीरयामास गुणाम्बुराशिः ॥

सरोष 'माहो' ननु भूसुरोऽहं
मुहुर्मुहुर्ब्राह्मण इत्यवादीः ।
त्वय्येव किं क्षात्रविभूतिरासीत्
विज्ञायते तुच्छवचोभिरेषा ॥

त्रिस्सप्तवारं परिमृग्य दृप्तान्
कुठारमालम्ब्य निहत्य राज्ञः ।
कलेवरैः स्वर्गपथं विधाय
यः प्रेषयामास गुरून् स विप्रः ॥

अयं न भीरुर्न दयार्द्रबुद्धिः
स्तुतिप्रियो नैव यथा खलु त्वम्' ।
इत्याक्षिपन्तं सहसा स रामो
'ददातु मह्यं धनुरि' त्यवोचत् ॥

निशम्य तद्वाच 'महो! महत्ता
प्रसन्नमूर्तेः करुणार्द्रदृष्टेः ।
मत्तोऽधिकं तेज इहास्ति सत्यं
क्षमालये राज्यरमालयेऽस्मिन्' ॥

इत्येवमन्तर्निदधौ कुठारी
परात्परो भार्गवरामभद्रः ।
वाक्यं समाकर्ण्य रघूत्तमस्य
सीताऽबिभेत्किं भविते'ति बाला ॥

स वेपते पंक्तिरथस्सदारः
वसिष्ठमुख्यास्तुतुषुस्तदानीम् ।
निरीक्षते देवततिर्भवित्रे
सर्वो जनः सस्मयमीक्षतेऽत्र ॥

कृतं न किञ्चित्किल राघवेण
शान्तः कथं भार्गवदाववह्निः ।
सौजन्यपाथोदविनीतवाणी-
वृष्टेः परस्तात् क्वनु रोषदाहः ?

जराभिभावात्प्रबलाच्च रोषात्
क्षुब्धः पुरा सम्प्रति निश्चलोऽयम् ।
आपादचूडं हि विलोकयंश्च
मुहुर्मुहुस्तुष्यति रामचन्द्रम् ॥

सहेलमानीतमपीह चापं
अपारयन् वोढुमसौ भृशार्तः ।
सद्यः प्रतिग्राहयितुं स रामं
निक्षेपगोप्तेव धनं तदीशम् ॥

विवक्षुरासीदपि रामभद्रं
स मन्त्रजातं मनुते सदा यत्।
ज्ञाता स्वयंभूस्स्वयमेव सर्वं
इत्येव चोपारमत क्षणेन॥

'यतो भवत्यास्सहयोगलोपः
ततोऽवतारे न हि तुष्टिरस्य।
जांतेत्यवेहीति' वदन्निवास्य
पक्ष्मद्वयं वीक्ष्य चचाल सीताम्॥

धनुर्जिघृक्षोस्समुपागतस्य
रामस्य सौन्दर्यसुधाप्रवन्तीम्।
चक्षुः पुटाभ्यां परिपीय सोऽयं
प्रमोदभाराम्बुनिधौ ममज्ज॥

'गृहाण! कोदण्डमिती' व वक्तुं
अपारयन्तीमलसां स जिह्वाम्।
ससार निन्दन्निव बाहुरस्य
धानुष्कघण्टाक्वणितैः पुरस्तात्॥

यदा पुनः भार्गवरामहस्त-
गतं धनुर्दाशरथिश्चकर्ष।
गतं प्रभावेण तदैव सद्यः
कुठारिणो भूपतिवैरिणोऽस्य ॥

या कापि विद्युत्सुषमा प्रपेदे
कल्याणरामं जमदग्निसूनोः।
पितुः क्रमात् प्रश्रितवृत्तमाढ्यं
सम्पत् कुमारं श्रयते हि लोके ॥

प्रगृह्य शक्त्या सह तस्य चापं
मौर्वीं समाकृष्य शरं नियोज्य।
'कुत्रास्य बाणस्य विमोक्ष आर्य !
मुधा रघूणां न शरे प्रवृत्तिः' ॥

इत्युक्तवन्तं स हि जामदग्न्यः
कुमार! माराधिकसौकुमार्य! ।
जगत्त्रयीस्तव्यपराक्रमस्त्वं
कोऽलं भवेदत्र विधातुमेवम् ॥

यदा गृहीतं धनुरेष सद्यः
पराजितोऽहं पुरुषोत्तमेण।
इत्युक्तवत्यार्यजनान्तिकेऽस्मिन्
वृष्टिः सुमानां निपपात भूयः ॥

**कलहंसवृत्तम्--**

निगृहीत एष जमदग्निकुमारो
विजयी परं हि रघुनाथकुमारः।
इति लौकिकास्तु बहुधा विवृण्वते
न हि निग्रहोऽस्य परमाग्रहस्य सः ॥

*इति श्री रघुनाथाचार्यकृतौ रामविजये*
*विनिग्रहाख्यः तृतीय सर्गः।*



# रामविजयम्

## जयतु

'जयत्वयं दाशरथिः कुमारो
बभञ्ज यस्तं गिरिशस्य चापम्।
उवाह पुत्रीं जनकस्य राज्ञो
महोदयो दीनमहादयश्च ॥

गाधेययज्ञावनबद्धदीक्षो
यज्ञेश्वरत्वं प्रकटीचकार।
स्वकं य इत्थं स हि रामचन्द्रो
जयी लसेन्नित्यकथासु शश्वत् ॥

अवाप्य शार्ङ्गं धनुरेनमाहो !
शराज्यते कामपि दिव्यशोभाम् ।
पुष्णाति तस्यापि परात्परस्य
जयत्वसौ तेन विराजमानः ॥

इत्येवमुच्चैरवदत्स वाग्मी
महानुभावो जमदग्निसूनुः ।
वसिष्ठ आगत्य सशिष्टसंघः
ततोऽब्रवीद्राघवसार्वभौमम् ॥

'कलां स्वकीयामुपसंजहार
भवांस्ततो वैभवमातनोति ।
मग्नान्भवाब्धौ हि समुद्दिधीर्षोः
जीवान् विलासो जयतात्तवैषः'

इति 'प्रपन्नैकशरण्य एष
स्वधर्मसंरक्षणबद्धकक्षः ।
विभूतिमाचित्य निजामनन्यां
रामो जयत्वार्यनुतस्त्रिलोक्याम्' ॥

जगाद चैवं कुशिकात्मजन्मा
सङ्घो मुनीनामपि शिष्ट एवम्।
'जये' ति रामं रघुवंशसोमं
उद्धृत्य बाहुं हि शशंस सर्वः ॥

देवास्सहर्षं 'पुरुषोत्तमोसा-
वधिज्यधन्वा जयतादजस्रम्।
मा भूद्विपद्धर्मपथस्य काचित्'
इत्यूचुरार्तार्तिहरं नमन्तः ॥

**मत्तावृत्तम्--**

रामस्तावदनूनगुणाढ्यं
शार्ङ्गं योजितबाणमवेक्ष्य।
'धर्मः कोऽपि जयत्वि' ति च्क्ते
कुर्वन् भार्गवपुत्रमपश्यत् ॥

*इति श्री रघुनाथाचार्यकृतौ रामविजये*
*जयत्वाख्यः चतुर्थः सर्गः।*



# रामविजयम्

## योगावगमः

न भेद आसीन्मिथ आवयोश्च
नाऽहं त्वदन्यो न भवान्मदन्यः।
अतः क्षतिः काऽपि न मे तवापि
द्वयोस्तु जागर्ति जयः परस्मात्॥

पुरा धरित्री किल कश्यपाय
मया वितीर्णा न हि तां स्पृशामि।
स्वामिन्! महेन्द्राद्रिपथं शरैस्त्वं
निष्पादये'त्थं न्यगदत्कुठारी॥

पश्यत्सु देवेषु विमानगेषु
संबन्धिमुख्येषु नवागतेषु।
शरैस्सुतीक्ष्णैः कतिचित्कलासु
माहेन्द्रमार्गं विदधौ स रामः ॥

'अहं हि सौभाग्यवती यतोऽसौ
श्रीरामचन्द्रः प्रियतां गतो मे।
अध्यक्षमेतत्पुरुषोत्तमत्वं
शार्ङ्ग्रहात् भार्गवनिग्रहाच्च' ॥

इत्येवमासीत्सुकुमारमूर्त्याः
मनस्यहो! राघवधर्मपत्न्याः।
तन्व्याः किमस्ति स्पृहणीयसंपत्
अन्या प्रियादुत्तमरूपशक्तेः ॥

वसिष्ठ! किं कौशिक! मादृशोऽस्ति
धन्याग्रणीर्ज़ीवगणे त्रिलोक्याम्।
यो रामचन्द्रस्य पिता गुणाब्धेः'
इत्याबभाषे नृपतिर्मुनी तौ ॥

ततस्स पाथेय उपेत्य रामं
पप्रच्छ तं भार्गवमेव 'मार्य!
कौतस्कुतं ब्रूहि धनुस्तवेदं?
उवाच पश्चाज्जमदग्निसूनुः ॥

ससर्ज पूर्वं स तु विश्वकर्मा
चापद्वयं प्रादित निस्तुलं तत् ।
पुरारये पुष्पशरारयेऽन्यं
मुरारये रात्रिचरारयेऽन्यम् ॥

गते च काले महति त्रिनेत्रः
स देवराताय धनुर्दिदेश ।
तदन्ववाये जनकस्य राज्ञो
गृहेऽवतस्थे परिपूज्यमानम् ॥

दिनेषु यातेषु हि केषुचिच्च
हरेरविन्ददृचिको धनुस्तत् ।
असावयच्छज्जमदग्नये तत्
अलम्भि तस्मादतुलं मयैवम्' ॥

इत्युक्तमेतत्किल भार्गवेण
निशम्य सर्वे तुतुषुस्तदानीम् ।
स भूसुरो दाशरथिं जगाद
'महोदयाद्धा ननु साधयामि' ॥

इतिं ब्रुवन्तं किल जामदग्न्यं
प्रसन्नचेतस्कमवेक्ष्य वायुः ।
चचाल सन्तोषभरादिवान्तः
प्रभा बिसस्रुश्च दिशां समन्तात् ॥

प्रतापमारोप्य किलात्मनीव
रामस्य कोदण्डधरस्य यावत् ।
स्ववंशजस्यायमहो विवस्वां-
स्तताप दीर्घैः स्वकरैः सुतीक्ष्णैः ॥

**प्रबोधितावृत्तम्--**

अथ रामभद्रमनुरुध्य ते समे
पथि जाह्नवीविमलतीर्थवारिषु ।
विनिशम्य शङ्खनिनदं दिवाकरं
समुपास्य राजनगरं प्रतस्थिरे ॥

शुभं भूयात्

*इति श्रीरघुनाथाचार्यकृतौ रामविजये*
*योगावगमाख्यः पञ्चमः सर्गः ।*
*रामविजयं सम्पूर्णम् ।*

